# एकाक्षरकोशः

https://sa.wikisource.org/s/1h3
सौभरिकृता एकार्थनाममाला अपि द्रष्टव्या।

# पुरुषोत्तमदेव एकाक्षरकोशः

अकारो वासुदेवः स्यादाकारश्च पितामहः ।

पूजायां अपि माङ्गल्ये आकारः परिकीर्त्तितः ।। १

इकारो उच्यते कामो लक्ष्मी रीकार उच्यते ।

उकारः शङ्करः प्रोक्त ऊकारश्चापि रक्षणे ।। २

ऋकारो देवमाता स्यादॄकारो दनुजप्रसूः ।

ऌकारो देवयोनिः स्याल्ॡर्माता सद्भिरुच्यते ।। ३

एकारः कथितो विष्णुरैकारश्च महेश्वरः ।

ओकारस्तु भवेद्ब्रह्मा औकारो रुद्र उच्यते ।। ४

अं स्याच्च परमं ब्रह्म अः स्याद्देवो महेश्वरः ।

कः प्रजापतिरुद्दिष्टो को वायुरिति शब्दितः ।। ५

कश्चात्मा च समाख्यातः कः प्रकाश उदाहृतः ।

कं शिरो जलं आख्यातं कं सुखं च प्रकीर्तितं ।। ६

पृथिव्यां कुः समाख्याता कुत्सायां कुः प्रकीर्तितः ।

खं इन्द्रियं समाख्यातं खं आकाशं उदाहृतं ।। ७

खं स्वर्गे च समाख्यातं खं सर्पे च प्रकीर्तितं ।

तथा श्वभ्रे च खं प्राहुः खं शून्ये च प्रकीर्त्तितं ।। ८

गो गणपतिरुद्दिष्टो गो गन्धर्वः प्रकीर्त्तितः ।

गं गीतं गा च गाथा स्याद्गौर्धेनुर्गौः सरस्वती ।। ९

गौर्मातापि समुद्दिष्टा पृथिव्यां गौः प्रकीर्त्तिता ।

घो घण्टायां समाख्यातः किङ्किणी घा प्रकीर्त्तिता ।। १०

उपमा घा समाख्याता कुस्वरे घुः प्रकीर्त्तितः ।

हनने घा समाख्याता गन्धने घः प्रकीर्त्तितः ।। ११

ङकारो भैरवः ख्यातो ङकारो विषये स्मृतः ।

चकारश्चन्द्रमाः ख्यातस्तस्करश्च प्रकीर्त्तितः ।। १२

निर्मलं छं समाख्यातं तरणी छः प्रकीर्त्तितः ।
छेदने छः समाख्यातो विद्वद्भिः शब्दकोविदैः ।। १३
वेगिते जः समाख्यातो जघने जः प्रकीर्त्तितः ।
जेता च जः समाख्यातः प्रसिद्धैः शब्दकोविदैः ।। १४
झंझावाते झकारः स्यान्नष्टे झः समुदाहृतः ।
ञकारो गायने प्रोक्तो ञकारो घर्घरध्वनौ ।। १५
टङ्कारे टः पृथिव्यां टा टो ध्वनौ च प्रकीर्तितः ।
ठो महेश्वर आख्यातः शून्ये च ठः प्रकीर्तितः ।। १६
बृहद्ध्वनौ च ठः प्रोक्तस्तथा चन्द्रस्य मण्डले ।
डकारः शङ्करः प्रोक्तस्त्रासध्वन्योः प्रकीर्तितः ।। १७
ढकारः कीर्तिता ढक्का निर्गुणे च ध्वनावपि ।
णकारः कीर्तितो ज्ञाने निर्णयेऽपि प्रकीर्तितः ।। १८
तकारः कथितश्चौरः क्रोडे पुच्छे प्रकीर्तितः ।
शिलोच्चये थकारः स्यात्थकारो भयरक्षणे ।। १९
दं कलत्रे समाख्यातं दो दानच्छेदधातुषु ।
धं धने च धनेशे धो धा धातरि निदर्शितः ।। २०
धिषणा धीः समाख्याता धूश्च स्याद्भारचिन्तयोः ।
नकारः सुगते बन्धे नुः स्तुतौ च प्रकीर्तितः ।। २१
नेता नीश्च समाख्यातस्तरणौ नौः प्रकीर्तिता ।
नकारः सौगते बुद्धौ स्तुतो सूर्ये च कीर्तितः ।। २२
नशब्दः स्वागते बन्धौ वृक्षे सूर्ये च कीर्तितः ।
पः कुबेरः समाख्यातः पश्चिमे च प्रकीर्तितः ।। २३
पवने पः समाख्यातः पाः पाने पाश्च पातरि ।
कफे वाते फकारः स्यात्तथाह्वाने प्रकीर्तितः ।। २४
झंझावाते फकारः स्यादक्षरे च प्रकीर्तितः ।
कोपे फिश्च समाख्यातस्तथा निष्फलभाषणे ।। २५
वक्षःस्थले च बः प्रोक्तो गदायां समुदाहृतः ।
नक्षत्रं भं बुधैः प्रोक्तं भ्रमरे भः प्रकीर्तितः ।। २६
भा दीप्तिरपि भूर्भूमिर्भीर्भयं कथिता बुधैः ।
मः शिवश्चन्द्रमा वेधा मा च लक्ष्मीः प्रकीर्तिता ।। २७